॥ यमस्तोत्रं सावित्रीकृत ब्रह्मवैवर्तपुराणान्तर्गतम् ॥

अथाष्टाविंशोऽध्यायः ।
श्री नारायण उवाच ।
हरेरुत्कीर्तनं श्रुत्वा सावित्री यमवक्त्रतः ।
साश्रुनेत्रा सुपुलका यमं पुनरुवाच सा ॥ १॥

सावित्र्युवाच ।
हरेरुत्कीर्तनं धर्म स्वकुलोद्धारककारणम् ।
श्रोतृणां च वक्तृणां जन्ममृत्युजराहरम् ॥ २॥

दानां च व्रतानां च सिद्धीनां तपसां परम् ।
योगानां च वेदानां सेवनं कीर्तनं हरेः ॥ ३॥

मुक्तत्वममरत्वं वा सर्वसिद्धित्वमेव वा ।
श्रीकृष्णसेवनस्यैव कलां नार्हन्ति षोडशीम् ॥ ४॥

भजामि केन विधिना श्रीकृष्णं प्रकृतेः परम् ।
मूढां मामबलां तात वद वेदविदां वरः ॥ ५॥

शुभकर्मविपाकं च श्रुतं नृणां मनोहरम् ।
कर्माशुभविपाकं च तन्मे व्याख्यातुमर्हसि ॥ ६॥

इत्युक्त्वा सा सती ब्रह्मन्भक्तिनम्रात्मकंधरा ।
तुष्टाव धर्मराजं च वेदोक्तेन स्तवेन च ॥ ७॥

सावित्र्युवाच ।
तपसा धर्ममाराध्य पुष्करे भास्वरः पुरा ।
धर्मांशं यम् सुतं प्राप धर्मराजं नमाम्यहम् ॥ ८॥

समता सर्वभूतेषु यस्य सर्वस्य साक्षिणः ।
अतो यन्नाम शमनमिति तं प्रणमाम्यहम् ॥ ९॥

येनान्तश्च कृतो विश्वे सर्वेषां जीविनां परम् ।
कर्मानुरूपकालेन तं कृतान्तं नमाम्यहम् ॥ १०॥

बिभर्ति दण्डं दण्ड्याय पापिनां शुद्धिहेतवे ।
नमामि तं दण्डधरं यः शास्ता सर्वकर्मणाम् ॥ ११॥

विश्वे यः कलयत्येव सर्वायुश्चापि संततम् ।
अतीव दुर्निवार्यं च तं कालं प्रणमाम्यहम् ॥ १२॥

तपस्वी वैष्णवो धर्मो संयमी विजितेन्द्रियः ।
जीविनां कर्मफलदं तं यमं प्रणमाम्यहम् ॥ १३॥

स्वात्मारामश्च सर्वज्ञो मित्रं पुण्यकृतां भवेत् ।
पापिनं क्लेशदो यस्य पुत्रो मित्रो नमाम्यहम् ॥ १४॥

यज्जन्म ब्रह्मणो वंशे ज्वलन्तं ब्रह्मतेजसा ।
यो ध्यायति परम् ब्रह्म ब्रह्मवंशं नमाम्यहम् ॥ १५॥

इत्युक्त्वा सा च सावित्री प्रणनाम यमं मुने ।
यमस्तां विष्णुभजनं कर्मपाकमुवाच ह ॥ १६॥

इदं यमाष्टकं नित्यं प्रातरुत्थाय यः पठेत् ।
यमात्तस्य भयं नास्ति सर्वपापात्प्रमुच्यते ॥ १७॥

महापापी यदि पठेत् नित्यं भक्त्या च नारद ।
यमः करोति तं शुद्धं कायव्यूहेन निश्चितम् ॥ १८॥

इति श्रीब्रह्मवैवर्ते महापुराणे प्रकृतिखण्डे नारदनारायणसंवादे
सावित्रिरकृतयमस्तोत्रं नामाष्टाविंशोऽध्यायः ॥